| | | |
|---|---|---|
| अ-शि, नोणः | २५ अयनं च । | |
| नोणः | २६ छन्दस्यृदवग्रहात् । | छन्दसि २७ |
| छं-सि, नोणः | २७ नश्च धातुस्थोरु-षुभ्यः । | नः २८ |
| नः, नोणः | २८ उपसर्गादनोत्परः । (१) | उ-त् ३४ |
| उ-त्, र-म्, नोणः | २९ कृत्यचः । (२) | कृति ३४, अचः ३१ |
| ,, ,, कृति, नोणः, अचः | ३० णेर्विभाषा । | वि-षा ३१ |
| अचः, कृति, वि-षा, नोणः | ३१ हलश्चेजुपधात् । | हलः ३२ |
| हलः, कृति, नोणः | ३२ इजादेः सनुमः । | |
| उ-त्, र-म्, नोणः | ३३ वा निंस-निक्ष-निन्दाम् । | |
| उ-त्, र-म्, कृति, नोणः | ३४ न भा-भू-पू-कमि-गमि-प्यायि-वेपाम् । (३) | न ३६ |
| नोणः, न | ३५ षात्पदान्तात् । | |
| ,, ,, | ३६ नशेः षान्तस्य । | |
| ,, ,, | ३७ पदान्तस्य | |
| ,, ,, | ३८ पदव्यवायेऽपि | |
| ,, ,, | ३९ क्षुभ्नादिषु च । (४) | |



---

१—काशिकादिषु एतत्सूत्रं 'उपसर्गाद्बहुलम्' इति पठ्यते। भाष्यसम्मतस्त्वस्मद्धृत पाठ एव।

२—कृत्स्थस्य णत्वे निर्विण्णस्योपसंख्यानम्।

३—(वा०) (क) ण्यन्तानां भादीनामुपसंख्यानं कर्तव्यम्। (ख) भादिषु पूञ्ग्रहणम्।

४—(गणपा०) क्षुभ्ना (क्षुभ्नाति), नृनमन्, नन्दिन्, नन्दन, नगर, एतान्युत्तरपदानि संज्ञायाम् प्रयोजयन्ति। हरिनन्दी, हरिनन्दनः, गिरिनगरम्, नृतिर्यङि प्रयोजयति, नरीनृत्यते। नर्तन, गहन, नन्दन, निवेश, निवास, अग्नि, अनूप, एतान्युत्तरपदानि प्रयोजयन्ति। परिनर्तन, परिगहन, परिनन्दन, शर-

(सन्धिप्र—)

| | | |
|---|---|---|
| | ४० स्तोः श्चुना श्चुः । | स्तोः ४२ |
| स्तोः | ४१ ष्टुना ष्टुः । | ष्टुः ४४ |
| स्तोः, ष्टुः | ४२ न पदान्ताट्टोरनाम् । (१) | न ४४ |
| स्तोः ष्टुर्न | ४३ तोः षि । | तोः ४४ |
| ,, ,, | ४४ शात् । | |
| | ४५ यरोऽनुनासिकेऽनुनासिको वा । (२) | यरः ४७ |
| यरः | ४६ अचो रहाभ्यां द्वे । | अचः ४७ द्वे ५२ |
| अचः, द्वे | ४७ अनचि च । | |
| द्वे | ४८ नादिन्याक्रोशे पुत्रस्य । (३) | न ५२ |
| न, द्वे | ४९ शरोऽचि । | |
| न, द्वे | ५० त्रिप्रभृतिषु शाकटायनस्य । | |
| ,, ,, | ५१ सर्वत्र शाकल्यस्य । | |
| ,, ,, | ५२ दीर्घादाचार्याणाम् । | |

---

निवेष, शरनिवास, शराग्नि, दर्भानूप, आचार्यादणत्वं च, आचार्यभोगीनः (आचार्यानी का०), आकृतिगणोऽयम् ।

पाठान्तरम्—क्षुभ्ना, तृप्नु, नृनमन्, नरनगर, नन्दन, यङ्नृती, गिरि-नदी, गृहनमनं, निवेश, निवास, अग्नि, अनूप, आचार्यभोगीन, चतुर्हायन, इरि-कादीनि, वनोत्तरपदानि संज्ञायाम् । इरिका, तिमिर, समीर, कुबेर, हरि, कर्मार, आकृतिर्गणः । इति क्षुभ्नादिः ।

१—(वा०) अनाम्नवतिनगरीणामिति वक्तव्यम् ।

२—(वा०) यरोऽनुनासिके प्रत्यये भाषायां नित्यवचनम् ।

(वा०) (क) द्विर्वचने यणो मयः (ख) शरः खयो द्वे भवत इति वक्तव्यम् (ग) अवसाने च द्वे भवत इति वक्तव्यम् ।

३—(वा०) (क) तुत्परेच्चे ति वक्तव्यम् । (ख) वा हृतजग्धयोः । (ग) चयो द्वितीयाः शरि पौष्करसादेः

| | | |
|---|---|---|
| | ५३ झलां जश् झशि । | झलाम् ५६ |
| झ-म्, जश् | ५४ अभ्यासे चर्च । | चर् ५६ |
| झ-म्, चर् | ५५ खरि च । | |
| झलाम्, चर् | ५६ वावसाने । | वा, अ-ने ५७ |
| अ-ने, वा | ५७ अणोऽप्रगृह्यस्यानुनासिकः । | |
| | ५८ अनुस्वारस्य ययि परसवर्णः । | अ-स्य, ययि, प-र्णः ५९ |
| ययि,अ-स्य,प-र्णः | ५९ वा पदान्तस्य । | |
| परसवर्णः | ६० तोर्लि । | |
| सवर्णः | ६१ उदः स्थास्तम्भोः पूर्वस्य । (१) | पू-स्य ६२ |
| पू-र्णः | ६२ झयो होऽन्यतरस्याम् । | झयः ६३ अ-म् ६५ |
| झयः, वा | ६३ शश्छोऽटि । (२) | |
| वा | ६४ हलो यमां यमि लोपः । | हलः लोपः ६५ |
| हलः, वा, लोपः | ६५ झरो झरि सवर्णे । | |
| | ६६ उदात्तादनुदात्तस्य स्वरितः । | अ-स्य ६७ |
| अनुदात्तस्य | ६७ नोदात्तस्वरितोदयमगार्ग्य-काश्यप-गालवानाम् । | |
| | ६८ अ अ । | |



इत्यष्टमाध्याये चतुर्थः पादः ।

समाप्तोऽष्टमाध्यायः ।

इत्यष्टाध्यायीसूत्रपाठः समाप्तः ।

---

१—(वा०) उदः पूर्वत्वे स्कन्देश्छन्दस्युपसंख्यानम् ।

२—(वा०) छत्वममीति वक्तव्यम् ।

जीवश्शिवः

आणवेनैव बद्धः स्वयं मायेकार्
देहनाम्नो मलात्, कार्मतश्चान्तिमोऽस्य
इत्थमावर्तयन्जीव आवागमं
विन्दते स्व-स्व-रूपं शिवानुग्रहात्

